॥ श्रीपीताम्बरारत्नावलीस्तोत्रम् ॥

श्रीगणेशाय नमः ॥ श्रीपीताम्बरायै नमः ।

ओङ्कारद्वयसम्पुटान्तरपुटं मायास्थिराद्वन्द्वितं
तन्मध्ये बगलामुखीति विमलं सम्बोधनं सर्वं च ।
दुष्टानामथ वाचमाशु च मुखं सस्तम्भयेत्यक्षरं
जिह्वां कीलय कीलयेति च लिखेद्बुद्धि तथा नाशय ॥ १॥

ब्रह्मास्त्रं सकलार्थसिद्धिजनकं षट्त्रिंशदर्णात्मक-
म्प्रोक्तं पद्मभुवां हिताय जगतां यन्नारदाग्रे पुरा ।
जीवन्मुक्तपदे विभान्ति सुधियो येषां मुखे भासते
निर्द्वन्द्वामृतसागरेन्दुकिरणाहाराश्चकोरास्तु ते ॥ २॥

ओमित्यादिस्वरूपं जपति तव शिवे शब्दतन्मात्रगर्भा-
वाचो यस्मात् परार्थप्रकटितपटवो वर्णरूपा निरीयुः ।
ब्रह्माद्यैः पञ्चतत्वैः परिवृतमनधं चित्प्रबोधाधिगम्यं
दुर्ज्ञेयं योगयुक्तैः कथमपि मनसा योगिभिर्गृह्यमाणम् ॥ ३॥

ह्लीं बीज हृदियस्य भाति विमलं लक्ष्मीः स्थिरा तद्गृहे
धैर्यं तस्य कलेवरेऽपि विशते दीर्घायुषो भूतले ।
कल्पान्तेष्वपि वृद्धिमेति विमला तद्वंशवल्ली परा
शौर्यं स्थैर्यमुपैति तस्य पुरतस्त्रस्यन्ति वादीश्वरा ॥ ४॥

बद्धुं वारिधिमुद्यतो जनकजानाथोऽपि पीताम्बरे !
त्वां ध्यात्वाऽर्णवशोषणे कृतमतिः सेतु प्रचक्रे द्रुतम् ।
जित्वा रावणमुग्रशत्रुमबलान् बन्दीन् विमुच्याऽमरान्
कीर्तिं लोकसुखोदयां व्यरचयत् कल्पस्थिराममम्बिके ॥ ५॥

गर्वी खर्वति रङ्कति क्षितिपतिर्मूकायते वाक्पति-
र्वह्निः शीतति दुर्जनः सुजनते पुष्पायते वासुकिः ।
श्रीनित्ये बगले तवाक्षरपदैर्यन्त्रीकृता यन्त्रिताः
के के नो निपतन्ति स्रस्तमुकुटाश्चन्द्रार्कतुल्या अपि ॥ ६॥

लावण्यामृतपूरिते तव कृपापाङ्गे निमग्ना नरा
बह्मेशादिदिगीशवृन्दमपि ते जानन्ति गुञ्जोपमम् ।
येषां चेतसि संस्थिताऽसि बगले ! ते विश्वरक्षाक्षमाः
प्रारब्धं द्रढयन्ति सत्वरतरं विघ्नैरविघ्नीकृताः ॥ ७॥

मुख्यत्वं समुपैति संसदि तवाऽपाङ्गावलोके नरः
किं तच्चित्रमहो स्वयं प्रभवते सृष्टिस्थितिध्वंसने ।
यश्चित्ते तव ``भातिमामक इति" त्वद्दर्शनं यस्य वा
तं सर्वा ह्यणिमादयोऽप्यतितरामाराधयन्ते ध्रुवम्  ॥ ८॥

क्षीणानां बलदायिनीं जलनिधौ पोतस्थिता नाविकां
तत्त्राणं घनकुञ्जगह्वरगिरिव्याघ्रादिभीतेष्वपि ।
त्वां पीताम्बरधारिणीं परशिवा चन्द्रार्द्धचूडां गदा-
हस्तां वामकरे प्रतीपरसनामुन्मीलयन्तीं भजे  ॥ ९॥

स्वेच्छं ये प्रणमन्ति पादयुगलं पीताम्बरे ! तावकं
ते वाञ्छाधिकमर्थमाप्य सकलां सिद्धिं भजन्ते पुनः ।
यद्यत्कर्त्तुमुरीकरोति बगले ! त्वत्साधकोऽत्राधुनाः
तत्सञ्जातमिवेक्षते तव कृपाऽपाङ्गावलोके क्षणात्  ॥ १ ०॥

वाणी सूक्तिसुधारसद्रवमयी सालङ्कृतिस्तन्मुखे
शापानुग्रहकारिणी कविजनानन्दैकसम्वर्द्धिनी ।
व्याकर्तुं क्षमते विशालमतिमांस्त्वत्सेवको वाङ्मयं
किं चित्रं यदि सृष्टिमाशु रचते ब्रह्माण्डकोट्यायते  ॥ ११॥

देवि !  त्वद्भक्तदृष्ट्या तुहिनगिरिमुखाः पर्वताः पांसुतुल्या
ज्वालामालाश्च चन्द्रामृतकरसदृशा पुष्पतां यान्ति नागाः ।
मूकत्वं वाक्यतीन्द्राः सरसि समतुलामाश्रयन्ते समुद्रा
राजानो रङ्कभावं रणभुवि रिपवो विद्रवन्ते विशस्त्राः  ॥ १२॥

लेख्यं तावकमन्त्रबीजममलं दुष्टौघसंस्तम्भन
वश्याकर्षणमारणप्रमथनप्रक्षोभणोच्चाटने ।
व्यक्तं वज्रमिवापरं यदि मुखे जागर्ति तस्याग्रतः
पादान्तः परिसञ्चरन्ति रिपवो ये सप्तद्वीपेश्वरा  ॥ १३॥

नानारत्नविमूषितामलमणिद्वीपे सुधासागरे
कल्पानोकहकाननान्तरगता या रत्नवेदी परा ।
तत्राकारितपञ्चप्रेतकमये सिंहासने संस्थितां
ध्यायेऽहं करुणाकरां हरिहराराध्यामशेषार्थदाम्  ॥ १४॥

वाग्देवी वदने वसत्यविरत्तं नेत्रे च लक्ष्मीः करे
दानं दीनकृपालुता च हृदये वीरत्वमाजौ सदा ।

त्वद्भक्तस्य भवाब्धिपारतरणे तत्त्वोदयो जायते
तेनेदं नलिनीदलोपरि जलाकारं जगद् भासते ॥ १५॥

चञ्चत्काञ्चनतुल्यपीतवसनां चन्द्रवतंसोज्ज्वलां
केयूराङ्गदहारकुण्डलधरां भक्तोदयायोद्यताम् ।
त्वां ध्यायामि चतुर्भुजां त्रिनयनामुग्रारिजिह्वां करे
कर्षन्तीमहमम्ब पाहि बगले ! त्राणं त्वमेवासि मे ॥ १६॥

मातस्ते महिमानमुग्रमधिकं प्रोक्तं स्वयं मानवै -
र्वाक्यं सन्द्रियते श्रमेण यदि वा शक्त्या गुणाम्भोनिधेः ।
नो निश्शेषतया सुरैरविदितप्रान्तस्य पद्मालये
तस्मात् सर्वगता त्वमेव सदसद्रूपा सदा गीयते ॥ १७॥

खञ्जं तार्क्ष्यसमोद्यमं प्रकुरुते तार्क्ष्यं च खञ्जाधिकं
वान्तं स्तम्भयते जलाग्निशमने याऽव्यक्तशक्ति शिवे ।
तद्बीजं बगलेति मेऽस्तु रसनालग्नं सदैवामलं
यद्ब्रह्मादिसूदुर्लभं भुवि नरैः सत्प्राक्तनैर्लभ्यते ॥ १८॥

स्तम्भत्वं पवनोऽपि याति भवतीह भक्तस्य पीताम्बरे ।
कि चित्रं यदि वारिधिः स्थलपदं मेरुस्तु माषोपमाम् ।
कल्पानोकहकामधेनुप्रमुखै रत्नैरलिन्दस्थितै-
र्वाञ्छार्थाधिकदानमाशु कुरुते दीनेष्वदीनेष्वपि ॥ १९॥

भाग्याद्यस्य मुखे विभाति विमला विद्या विशेषाधिका
षट्त्रिंशद्भिरथोदिता बहुगुणैर्बीजैस्तु सर्वार्थदा ।
तं सर्वे प्रणमन्ति मानवममी सेन्द्राः सुरा भूसुराः
क्रान्ताशेपमहोदयं स्वकलनाक्रान्तत्रिलोकालयम् ॥ २०॥

यत्किञ्चिद्भुवने विभाति विमलं रत्नं महानन्दनं
यां यां वृत्तिरुदारतां जनयते यद्यत्परं सुन्दरम् ।
यत्किञ्चित्भुवनेऽथवा नु महता शब्देन वा कीर्त्यते-
तत्सर्वं तव रूपमेव बगले ! संसारपारप्रदे ॥ २१॥

जाग्रत्पूर्णकृपामृतौधभरिते श्रीमत्कटाक्षेक्षणे
सर्वार्थप्रतिपादकव्रतधरे ये ये निमग्ना नराः ।
तेषां भावयमतीन्द्रिय निगदितुं ब्रह्मादयो न क्षमा
ये सङ्कल्पविकल्पमात्ररचनाः प्राणात्यये हेतवः ॥ २२॥

हस्ते सङ्गृह्य चापं शरधरनिकरैर्यत्किरातं महाजौ
पार्थो ब्रह्मास्त्रविद्याभ्यसनपटुमतिर्द्वन्द्वयुद्धे तुतोष ।
तत्सर्वं देववृन्दैरथ रिपुनिवहैर्वीक्षितं सिद्धलोकै -
र्धैर्यं शौर्यं च सर्वं तव वरजनितं भाति पीताम्बरेऽत्र ॥ २३॥

पीतां पीतजटाधरां त्रिनयनां पीतांशुकोल्लासिनीं
हेमाभाङ्गरुचिं शशाङ्कमुकुटां सच्चम्पकस्रग्युताम् ।
हस्तैर्मुद्गरवज्रवैरिरसनां सम्बिभ्रतीमादरात्
दीप्ताङ्गी बगलामुखीं त्रिजगतां संस्तम्भिनीं चिन्तये ॥ २४॥

कर्णालम्बितलोलकुण्डलयुगां श्वेतेन्दुमौलिं करैः
केयूराङ्गदपाशमुद्गरगदावज्रादिकान् बिभ्रतीम् ।
देवीं पीतविभूषणामरिकुलध्वंसोद्यतां ये नरा
ध्यायन्त्याशु लभन्ति सिद्धिमतुलां ते बालिशाः स्युः कथम् ॥ २५॥

लब्ध्वा मातरशेषकान्तिभरितानन्दं कृपावीक्षणं
वर्षीयानपि मोहितुं प्रभवति स्त्रीवृन्दमुन्मीलितुम् ।
किं तञ्चित्रमनेकथा भ्रमयते दृष्ट्या त्रिलोकीमिमां
सूर्येन्दुस्तनधारिणीमपि बलात् कन्दर्पदर्पार्धिकः ॥ २६॥

यन्त्रं जैत्रमनेकदुःखशमनं पीताम्बरे ! तावक-
मोङ्कारद्वयसम्पुटेन पुटित शिष्टैस्तथावेष्टितम् ।
तद्बाह्ये स्थिरमाययाष्टपुटितं पाशाङ्कुशाद्यावृतं
येषां चेतसि भाग्यतो निवसते ते विश्वसर्गक्षमाः ॥ २७॥

कर्पूरागुरुचन्दनैर्मृगमदैर्गोरोचनाकेशरै-
स्त्वत्पादाम्बुजमर्चयन्ति बगले ! ये प्रत्यह मानवा ।
ते लब्ध्वा श्रियमद्भुतामपि चिरं भोगांश्च भुक्त्वाऽवनौ
सायुज्यालयमाविशन्ति परमानन्दोऽस्ति यत्राधिकः ॥ २८॥

लव्ध्वा पादयुगे रतिं तव शिवे क्षुद्रोऽपि देवेन्द्रता-
मासाद्यामरसुन्दरीभिरमलैर्भोगैर्दिवि क्रीडति ।
ये हित्वा तव भक्तिमन्यभजनानन्दाश्चिरं ते नरा
भ्रष्टा धर्मपराङ्मुखा भ्रमधियो भारं वहन्ते भुवि ॥ २९॥

वामाराध्य हरो हरत्वमभजद् विष्णुस्तु विश्वात्मतां
चक्रे सृष्टिमजोऽप्यवोचदखिलं वेदादिसद्वाङ्मयम् ।
ध्यात्वा ध्वान्तमशेषमाशु हरते सूर्योऽपि पीताम्बरे ।

तीव्रं तापमपाकरोति रजनीनाथोऽपि चूडाश्रितः ॥ ३०॥

बुद्धिं नाशय कीलयाशु रसनामङ्घ्र्योर्गतिं स्तम्भय
दुष्टान् द्रावय मारयारिनिवहान् दासांश्चिरं पालय ।
इत्थं ये बगलामुखीं पदगतिं लब्ध्वा पठिष्यन्ति ते
यन्त्रारूढमिवारिवृन्दमीखलं कर्तुं समर्थाः सदा ॥ ३१॥

ध्यात्वा त्वां बगले ! पुरा गिरिसुता चक्रे शिवं स्वं वरं
प्रोक्तं नार्पयितुं शिवेन गदिता सङ्कल्पनाग्नौ तदा ।
त्यक्ताग्निर्गलितावलि गिरिसुतात् त्यक्त्वा गलस्तन्मुखात्
तस्मात् त्वं बगलामुखी निगदिता नित्या परा योगिनी ॥ ३२॥

नागेन्द्रैर्देवसिद्धैर्मुनिवरनिवहैर्दानवै राक्षसेन्द्रै-
र्दिक्पालैर्दिक्करीन्द्रैर्दिनकरप्रमुखैः सद्ग्रहैस्तारकाद्यैः ।
ब्रह्माद्यैः स्थूलसूक्ष्मैरविदितमुदिता त्वं परा चोन्मनी त्वं
नित्या पीताम्बरा त्वं रिपुभयशमनी भक्तिचित्तासनस्था ॥ ३३॥

शम्भुर्यद्गुरगगानत्तोद्यतमतिर्नाट्योत्सवैस्ताण्डवे
चक्रे चन्द्रमयूखकम्पनकरां नीराजनां पादयोः ।
हेमाम्भोजदलैर्जटाजलभरैरानन्दितैर्मौलिभिः
पूजां प्रत्यहमातनोति नटयन् स्वैर्हस्ततालादिभिः ॥ ३४॥

यां दध्रे चतुराननोऽपि वदने चित्तारविन्दस्थितां
यां वक्षःस्थलसंस्थितां हरिरजामालिङ्ग्य पीताम्बराम् ।
यद्देहार्धमुरीचकार पुरजित् सौन्दर्यसाराधिकां
षट्चकाक्षररूपिणीं भज सखे ! देवी जगत्पालिकाम् ॥ ३५॥

हस्ते भाति गदा सदार्त्तिशमनी रत्नावली त्वद्भुजे
पादे नूपुरमीशमौलिमणिभिर्नीराजितं राजते ।
ताटङ्कं श्रवणे कुचोपरि सदा कस्तुरिकालेपनं
काश्मीरद्रवमङ्गरागमधिकां पीतच्छविं तन्वते ॥ ३६॥

ॐकारद्वयसम्पुटेन पुटिता विद्यागमे संस्थिता
षट्चक्राक्षरबीजसाररचितां षट्त्रिंशदर्णात्मिकाम् ।
ये जानन्ति जपन्ति सन्ततमभिध्यायन्ति गायन्ति वा
ते वन्द्या विबुधैश्चरन्ति भुवने सिद्धार्चिताः सिद्धये ॥ ३७॥

स्वाहाशक्तिरुपासने तव ऋषिः श्रीनारदो देवता

नित्या श्रीबगलामुखी निगदिता छन्दो भवेत् त्रिष्टुभम् ।
बीजं तु स्थिरमायया विरचितं नानाविधस्तम्भने
प्रोक्तं पद्मभुवाऽखिलाप्तिविनियोगोऽप्यच्युताकारता ॥ ३८॥

हृद्यं सर्वसुरेश्वरैश्च ऋषिभिर्दुष्प्राप्यमेवाद्भुतं
स्तोत्रं गोप्यतमं स्वभाग्यवशतः प्राप्तं पठिष्यन्ति ये ।
सूक्त्या देवगुरुं धनेन घनदं जित्वा चिरञ्जीवितां
षण्मासात् सुखसागरे शिवसमाक्रीडां करिष्यन्ति ते ॥ ३९॥

देवी स्वप्नगता स्वयैव लिखितं मह्यं ददावद्भुतं
दिव्यास्त्रं पुरतः पठस्व विमलं सिन्दूरवर्णैः करैः ।
रोमाञ्चाङ्कितहर्षमाप्य लुलितैरङ्गैः पठन्तं नर-
प्राप्तोऽहं परमोदयप्रदमिदं ज्ञानं कवीन्द्रादिदम् ॥ ४०॥

प्राप्ता श्रीबगलामुखीवदनतः स्वप्ने सुविद्या मया
षट्त्रिंशद्भिरिमैः सुवर्णनिचयैः सद्बीजरत्नावली ।
येषां कण्ठगता विभाति जगतीपीठे प्रयोगक्षमा
वश्याकर्षणमोहमारणविधौ स्तम्भे तथोच्चाटने ॥ ४१॥

चलत्कनककुण्डलोल्लसितचारुगण्डस्थलां
लसत्कनकचम्पकद्युतिविराजिचन्द्राननाम् ।
गदाहतविपक्षकां कलितलोलजिह्वाञ्चलां
स्मरामि बगलामुखीं विमुखवाङ्मुखस्तम्भिनीम् ॥ ४२॥

॥ श्रीपीताम्बरारत्नावलीस्तोत्रम् सम्पूर्णम् ॥

॥ इति श्रीनारदोक्तं पीताम्बरादेवीस्तवराजस्स्तोत्रम् ॥

॥ संवत् १७९० शाके १७५५ आषाढमासे शुक्लपक्षे
५ मन्दवासरे लिखितं ब्रह्मचारिकाशिनाथेन ॥

॥ श्रीगङ्गाविश्वेश्वराभ्यां नमः ॥